V.P.P. for Rs. four and
annas eight only (Rs. 4/8)

To
Sri Raj Krishna,
80, Rajpur Road
Dehradun.

॥ श्रीः ॥

श्रीकालिदासकृतं

# राक्षसकाव्यम् ।

सटीकम् ।

काशीनाथ पाण्डुरङ्ग परब

इत्यनेन संस्कृतम् ।

तस्येदं पञ्चमं संस्करणम्
पणशीकरोपाह्वलक्ष्मणशर्मतनुजनुषा वासुदेव-
शर्मणा संशोधितम् ।

तच्च

मुम्बय्याम्

पांडुरंग जावजी

इत्येतैः स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये
रामचन्द्र येसू शेडगेद्वारा मुद्रयित्वा
प्रकाशितम् ।



ख्रिस्ताब्दाः १९२२

मूल्यं १ आणकः ।

॥ श्रीः ॥

श्रीकालिदासकृतं

# राक्षसकाव्यम् ।

## सटीकम् ।

कश्चिद्वनं बहुवनं विचरन्वयस्थो
वश्यां वनात्मवदनां वनितां वनार्द्राम् ।
तर्वर्यरिप्रदमुदीक्ष्य समुत्थितं खे
ना गामिमां मदकलः सकलां बभाषे ॥ १ ॥

कश्चिदिति । कश्चित् अनिर्दिष्टनामा ना पुरुषः वनितां स्त्रीं प्रति इमां प्रत्यक्षां सकलां समस्तां । गां वाचं बभाषे । अब्रवीदित्यर्थः । किं कुर्वन् । वनं काननं विचरन् भ्रमन् । किंभूतं वनम् । बहुवनं बहूनि वनानि उदकानि यत्र तत् । बहूदकमित्यर्थः । 'जीवनं भुवनं वनम्' इत्यमरः । किंविधः ना । वयस्थः वयसि तारुण्ये तिष्ठतीति वयस्थः । युवेत्यर्थः । पुनः किंविधः ना । मदकलः मदेन कलः हर्षविभ्रमयुक्तः । किं कृत्वा । तरवः वृक्षाः तेषाम् अरिः अग्निः तस्य अरिः उदकं तत् प्रददातीति तर्वर्यरिप्रदः मेघः तम् उदीक्ष्य दृष्ट्वा । किंविधं मेघम् । खे आकाशे समुत्थितं समुत्पन्नम् । किंविधां वनिताम् । वश्याम् अधीनाम् । पुनः किंविधाम् । वनात्मवदनां वनं पानीयं तत् आत्मा यस्य असौ वनात्मा चन्द्रः । क्षीरोदमथनोत्पत्तेः । तेन तुल्यं वदनं यस्याः सा ताम् । 'वनं सलिलकानने' इत्यमरः । पुनः किंविधाम् । वनार्द्रां वनेन मेघपानीयेन आर्द्राम् आर्द्रीकृताम् ॥

किमुवाचेत्याह—

पश्याब्जदृग्गिरितटेषु कुमातृसाह्वा-
न्भूदेवराजरिपुशत्रुसमावधूतान् ।
वैश्वानरारिजरिपुघ्नशराभिभूतै-
र्द्दक्श्रोत्रशत्रुभिरुपासितपुष्पशोभान् ॥ २ ॥

पश्येति । हे अब्जदृक् पद्मनयने, गिरितटेषु कुमातृसाह्वान् कुत्सिता माता अम्बा येषां ते कुमातरः तैः समाना आह्वा नाम येषां तान् । कदम्बानित्यर्थः । पश्य अवलोकय । 'आख्याह्वे अभिधानं च नामधेयं च नाम च' इत्यमरः ।

किंभूतान् कुमातृसाह्वान् । भूदेवराजरिपुशत्रुसमावधूतान् भूदेवाः ब्राह्मणाः तेषां राजा सोमः तस्य रिपुः मेघः । आच्छादकत्वात् । तस्य शत्रुः वायुः । विक्षेपकत्वात् । तेन सम्यक् आसमन्तात् अवधूतान् । कम्पितानित्यर्थः । पुनः किंभूतान् । दृक्श्रोत्रशत्रुभिरुपासितपुष्पशोभान् दृशावेव श्रोत्रे कर्णौ येषां ते दृक्श्रोत्राः सर्पाः तेषां शत्रवो मयूराः । 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक्' इत्यमरः । तैः उपासिता सेविता पुष्पशोभा येषां तान् । किंविधैः दृक्श्रोत्रशत्रुभिः । वैश्वानरारिजरिपुघ्नशराभिभूतैः वैश्वानरः अग्निः तस्य अरिः उदकं तत्र जाताः मत्स्याः तेषां रिपुः कैवर्तः सूर्यकः नाम मत्स्यविशेषः तं हन्तीति वैश्वानरारिजरिपुघ्नः कामः तस्य शराः बाणाः तैः अभिभूताः त्रस्ताः तैः ॥

पश्याद्रिसारसदृशीभिरमूभिरद्भि-
राप्लावयत्यमरगुब्धरणीमहिघ्नः ।
अब्दः सिताभिरसितः शबलं खगाभि-
र्वार्जैः सितैरिव विभाति वनं प्रबुद्धैः ॥ ३ ॥

पश्येति । हे वनिते, अमरगुप् अमराः देवाः तान् गोपायतीति अमरगुप् इन्द्रः अमूभिः अद्भिः तोयैः धरणीम् आप्लावयति सिञ्चति तं त्वं पश्य । किंभूताभिः अद्भिः । अद्रिसारसदृशीभिः पर्वतसारतुल्याभिः । किंभूतः अमरगुप् । अहिघ्नः अहिः वृत्रासुरः तं हन्तीति सः । 'अहिर्वृत्रासुरे सर्पे' इति विश्वः । अपः ददातीति अब्दः मेघः । 'अब्दः संवत्सरे मेघे' इति विश्वः । विभाति । किंभूतः अब्दः । सिताभिः शुक्लाभिः खगाभिः खम् आकाशं गच्छन्तीति खगाः बलाकाः ताभिः असितः शबलीकृतः । अत्रोत्प्रेक्ष्यते—सितैः वार्जैः वारि जातानि वार्जानि तैः कमलैः शबलं शबलीकृतं वनम् उदकमिव । किंविधैः वार्जैः । प्रबुद्धैः विकसितैः । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्' इत्यमरः ॥

गोष्ठं घृतं सुघृतवद्भिरमीभिरब्ध्यं
गोभिः समुद्धरति यद्बहुधा हिमघ्नः ।
तद्गव्यमम्बरगतं शिखिजात्मसंस्थं
निस्यन्दमानमभिवर्धयतीह गोजान् ॥ ४ ॥

गोष्ठमिति । तत् गव्यं गोषु रश्मिषु भवं गव्यं नीरं इह भूमौ गोजान् गविजाताः गोजाः तान् तृणादीन् अभिवर्धयति । वृद्धिं प्रापयतीत्यर्थः । किंभूतं गव्यम् । अम्बरगतम् अम्बरम् आकाशं तत्र गतं विद्यमानम् । पुनः किंविधम् । शिखिजात्मसंस्थं शिखी वह्निः तत्र जातः धूमः सः आत्मा स्वरूपं यस्य सः शिखिजात्मा मेघः तस्मिन् संस्था स्थितिः यस्य तत् । 'संस्था स्थितौ चरे

नाशे' इति विश्वः । पुनः किंविधम् । निस्यन्दमानम् अभिस्रवत् । तत् किम् । यत् गोष्ठं गोषु रश्मिषु स्थितं घृतं नीरं बहुधा हिमघ्नः हिमं हन्तीति हिमघ्नः सूर्यः समुद्धरति ग्रसते । 'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः' इति महाकविप्रयोगात् । कैः । अमीभिः गोभिः किरणैः । 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिङ्गं चिह्नशेफसोः ॥' इत्यमरः । किंभूतैः । सुघृतवद्भिः सुष्ठु घृतं पानीयं तद्वद्भिः । किंभूतं घृतम् । अग्र्यम् अग्रे भवं श्रेष्ठम् । उत्तममित्यर्थः ॥

अब्रुट्पलाशनिभदृग्घनजात्मवक्त्रा
वार्चस्वरेभनिभगा गजदोःसमोरुः ।
सीरिध्वजप्रसवतुल्यविषाह्वदासौ
त्रा संगता प्रमुदिता प्रसमीक्ष्य वार्दम्[१] ॥ ५ ॥

अब्रुडिति । असौ स्त्री प्रमुदिता हृष्टा । बभूवेत्यर्थः । किं कृत्वा । वार्दं वाः नीरं ददातीति वार्दः तं मेघं प्रसमीक्ष्य अवलोक्य । किंभूता असौ । त्रा पुरुषेण संगता सहिता । पुनः किंविधा । अब्रुट्पलाशनिभदृक् अप्सु रोहतीति अब्रुट् पद्मं तस्य पलाशं पत्रम् । 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः । तन्निभे दृशौ दृष्टी यस्याः सा तथा । पुनः किंविधा । घनजात्मवक्त्रा घनात् जीमूतात् जातं घनजं नीरम् । 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः । तत् आत्मा यस्य असौ घनजात्मा चन्द्रः । क्षीरोदमथनोत्पत्तेः । तेन तुल्यं वक्त्रं वदनं यस्याः सा । चन्द्रवक्त्रेति भावः । पुनः किंविधा । वार्चस्वरा वार्चः हंसः तस्य स्वरेण तुल्यः स्वरः यस्याः सा । एकस्वरस्य लोपः । पुनः किंविधा । उच्छृङ्खलान्यायेन इभनिभगा इभः हस्ती तेन निभं तुल्यं गच्छतीति इभनिभगा । पुनः किंविधा । गजदोःसमोरुः गजः हस्ती तस्य दोः करः । शुण्डेत्यर्थः । 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । तेन समे ऊरू यस्याः सा । 'सक्थि क्लीबे पुमानूरुः' इत्यमरः । पुनः किंविधा । सीरिध्वजप्रसवतुल्यविषाह्वदा सीरो हलं तत् अस्यास्तीति सीरी बलभद्रः । 'सीरोऽर्कहलयोः पुंसि' इति मेदिनी । तस्य ध्वजः तालद्रुमः तस्य प्रसवे फले ताभ्यां तुल्यौ । विषं पानीयं सापरा आह्वा नाम यस्य तत् विषाह्वं क्षीरं पयः तत् दत्तः तौ विषाह्वदौ पयोधरौ कुचौ । सीरिध्वजप्रसवतुल्यौ विषाह्वदौ यस्याः सा । तालफलवत् उन्नतस्तनीत्यर्थः । 'तालाङ्को मुसली हली' इत्यमरः । 'विषं तु गरले तोये' इति विश्वः ॥

१. एतदनन्तरम् 'गोमध्यमध्ये मृगगोधरेहे सहस्रगोभूषणकिंकराणाम् । नादेन गोभृच्छिखरे प्रमत्ता नृत्यन्ति गोकर्णशरीरभक्षाः ॥' इत्यधिकं क्वचित्.

सूर्यांशुनामपतिरुन्नतदृप्तगामी
वाङ्नामभिः परिवृतो विषनामदाभिः ।
उस्रावरः प्रमुदितः प्रतिनानदीति
गर्जन्तमीक्षणहितोच्चयतुल्यरूपम् ॥ ६ ॥

सूर्यांश्विति । असौ उस्रा गौः तस्याः वरः वृषः प्रमुदितः हृष्टः सन् प्रतिनानदीति प्रतिस्पर्धया अत्यर्थं नदति । किं कृत्वा । ईक्षणहितोच्चयतुल्यरूपम् ईक्षणानां हितं कज्जलं तस्य उच्चयः आधिक्यं यस्मिन् सः एव पर्वतः तेन तुल्यं रूपं यस्य सः मेघः तं गर्जन्तं वीक्ष्य शब्दायमानं दृष्ट्वा । किंभूतः वृषः । सूर्यांशुनामपतिः सूर्यः आदित्यः तस्य अंशवः रश्मयः तेषां नाम गोशब्दः तस्य पतिः । गोपतिरित्यर्थः । पुनः किंविधः । उन्नतदृप्तगामी । पुनः किंविधः । वाङ्नामभिः परिवृतः । वाक्शब्देन गोशब्देन उच्यते । वाक् इति नाम वाङ्नाम तेन तुल्यं नाम यासां ताः वाङ्नामानः गावः । धेनव इत्यर्थः । ताभिः परिवृतः । वेष्टित इत्यर्थः । किंभूताभिः गोभिः । विषनामदाभिः । विषस्य नाम यस्य तत् एवंविधं दुग्धं तत् ददतीति विषनामदाः ताभिः । क्षीरदाभिरित्यर्थः ॥

एनं पयोदपतिरुन्नमितं पयोदं
खस्थं महीतलगतः प्रतिगर्जतीव ।
भित्त्वावनिं वनरुहाक्षि शिरोरुहाभ्यां
संप्रस्थितोऽमृतधरैरभिषिच्यमानः ॥ ७ ॥

एनमिति । भो वनरुहाक्षि, वनं नीरं तत्र रोहतीति वनरुहं कमलं तद्वत् अक्षिणी यस्याः सा तस्याः संबोधनम् । पयोदपतिः । पयः क्षीरम् । 'पयः क्षीरं पयोऽम्बु च' इत्यमरः । तत् ददतीति पयोदाः गावः तासां पतिः वृषः प्रतिगर्जतीव । किं कृत्वा । शिरसि रुहतस्ते शिरोरुहे शृङ्गे ताभ्यां अवनिं पृथ्वीम् । 'क्ष्मावनिर्मेदिनी मही' इत्यमरः । भित्त्वा विदार्य । पुनः किं कृत्वा । एनम् उन्नमितं प्रसृतं पयोदं मेघं दृष्ट्वा । किंविधं पयोदम् । खस्थं आकाशस्थम् । किंभूतः वृषः । महीतलगतः भूतलस्थः । पुनः किंभूतः । अमृतधरैः अभिषिच्यमानः । अमृतं उदकं धरन्तीति । 'पयः कीलालममृतम्' इत्यमरः । तैः मेघैः अभिषिच्यमानः । पुनः किंविधः । संप्रस्थितः सम्यक्प्रस्थितः । प्रयाणाभिमुख इत्यर्थः ॥

स्रोतोजविक्षतजभूधरधातुरूपाः
स्वस्थाः पयोजदलहृक्शुचिशुक्रमासे ।

मासोर्नभस्यनभसोरतिसंपतन्त-
स्तीव्रं विषं विषधराः परिनिर्वपन्ति ॥ ८ ॥

स्रोत इति । भोः पयोजदलदृक् पद्मपलाशनयने, ते विषधराः मेघाः तीव्रं विषं पानीयं परिनिर्वपन्ति । प्रक्षिपन्तीत्यर्थः । किंविधाः विषधराः । स्रोतोजविक्षतजभूधरधातुरूपाः स्रोतसि जातं स्रोतोजं काञ्चनम्, विक्षतात् जातं विक्षतजं रुधिरम् । 'रक्तक्षतजशोणितम्' इत्यमरः । भूधराः पर्वताः, तेषां धातवः सुवर्णरूप्यादयः तैः तुल्यं रूपं येषां ते । पुनः किंविधाः । खस्थाः आकाशे तिष्ठन्तीति आकाशस्थाः । 'नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम्' इत्यमरः । शुचिशुक्रमासे शुचिश्च शुक्रमासश्च शुचिशुक्रमासौ तयोः समाहारः । 'ज्येष्ठे शुक्रः शुचिस्त्वयम् । आषाढे' इत्यमरः । आषाढज्येष्ठमासे नभस्यनभसोर्भाद्रपदश्रावणयोर्मासोः । 'श्रावणे तु स्यान्नभाः श्रावणिकश्च सः' इत्यमरः । 'स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः' इत्यमरः । अतिसंपतन्तः वर्षन्तः ॥

स्वयोनिभक्षध्वजसंभवानां
श्रुत्वा निनादं गिरिगह्वरस्थः ।
तमोरिबिम्बप्रतिबिम्बधारी
विरौति कान्ते पवनाशनाशः ॥ ९ ॥

स्वयोनीति । हे कान्ते, पवनाशनाशः पवनं वायुं अश्नातीति पवनाशः सर्पः । 'उरगः पन्नगो भोगी जिह्मगः पवनाशनः' इत्यमरः । तस्य नाशः यस्मात् एवंविधः । मयूरः । 'मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक्' इत्यमरः । विरौति नदति । शब्दं करोतीत्यर्थः । किं कृत्वा स्वयोनिभक्षध्वजसंभवानां निनादं श्रुत्वा स्वस्य अग्नेः योनिः काष्ठं तत् भक्षयतीति स्वयोनिभक्षः अग्निः तस्य ध्वजः धूमः तस्मात् संभवः येषां ते स्वयोनिभक्षध्वजसंभवाः मेघाः तेषां निनादं शब्दं श्रुत्वा आकर्ण्य । 'शब्दे निनादनिनदध्वनिध्वानरवस्वनाः' इत्यमरः । तदुक्तं मेघदूते—'धूमज्योतिः सलिलमरुतां संनिपातः क्व मेघः' इति । किंभूतः मयूरः । गिरिगह्वरस्थः गिरेः पर्वतस्य गह्वरं कंदरः तत्र तिष्ठतीति स्थः । पुनः किंभूतः । तमोरिबिम्बप्रतिबिम्बधारी तमसः अन्धकारस्य अरिः चन्द्रः । तन्नाशकत्वात् । तमोरेः सूर्यस्य बिम्बमिव बिम्बं यस्य सः चन्द्र इति वा । तस्य बिम्बं मण्डलं तस्य प्रतिबिम्बं प्रतिमानं चन्द्रकः तत् धरतीति धारी । 'समौ चन्द्रकमेचकौ' इत्यमरः । चन्द्रकधारीत्यर्थः ॥

गोष्ठश्च कुङ्कुमवपुः प्रतिराजतेऽसौ
सस्यद्रिदैत्यभुजगोत्तमशत्रुगोपः ।

उर्वीधराभमचिरोत्थितमम्बरं खे
दृष्ट्वाहिहा प्रमुदितो हिमहाह्वयानः ॥ १० ॥

गोष्ठ इति । असौ सप्त्यद्रिदैत्यभुजगोत्तमशत्रुगोपः सप्तयोऽश्वाः । 'घोटके वीतितुरगतुरंगाश्वतुरंगमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ॥' इत्यमरः । अद्रयः पर्वताः । 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः । दैत्याः असुराः, भुजगोत्तमाः सर्पश्रेष्ठाः । 'भुजंगोऽहिर्भुजंगमः' इत्यमरः । तेषां शत्रुः इन्द्रः तं गोपयतीति सः । इन्द्रगोप इत्यर्थः । प्रतिराजते प्रतिशोभते । किंविधः । गोष्ठः गवि भूमौ तिष्ठतीति गोष्ठः । 'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृतः ॥' इति हलायुधः । पुनः किंविधः । कुङ्कुमवपुः कुङ्कुमेन सदृशं वपुः यस्य सः । रक्तवर्ण इत्यर्थः । अन्यच्च हे कान्ते, अहिहा अहिः सर्पः तं हन्तीति अहिहा मयूरः । 'सर्पे वृत्रासुरेऽप्यहिः' इति वैजयन्ती । प्रनृत्यति नर्तति । किंभूतः मयूरः । हिमहाह्वयानः हिमं हन्तीति हिमहा अग्निः । तन्निवारकत्वात् । तस्य आह्वा नाम यस्य सः यानं वाहनं यस्य सः । शिखी इत्यर्थः । किं कृत्वा । अम्बरम् आकाशं तत् अस्य अस्तीति आश्रयत्वेन सः अम्बरः मेघः तम् खे आकाशे दृष्ट्वा । मेघं विलोक्य मयूरो नर्ततीति प्रसिद्धिः । किंविधं मेघम् । उर्वीधराभम् उर्वीधरः पर्वतः तद्वत् आभा यस्य सः । पर्वतसदृशमित्यर्थः । पुनः किंविधम् । अचिरोत्थितम् । नवोत्थितमित्यर्थः ॥

कृष्णोऽम्बरः क्षरति तोयमसावजस्र-
मन्याविमौ रणगताविव चेभराजौ ।
अन्ये त्वमी द्विरदवृन्दनिभाः क्षरन्तः
प्रच्छादयन्त्यमरसिद्धविमानमार्गम् ॥ ११ ॥

कृष्णोऽम्बर इति । असौ कृष्णोऽम्बरः मेघः अजस्रं निरन्तरं तोयं क्षरति वर्षति । 'अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः' इत्यमरः । च परम् अन्यौ इमौ मेघौ रणगतौ संग्रामे वर्तमानौ इभानां गजानां राजानाविव । लक्ष्येते इति शेषः । तु पुनः अन्ये अमी द्विरदवृन्दनिभाः गजकुलसदृशाः क्षरन्तः स्रवन्तः मेघाः अमरसिद्धविमानमार्गम् अमराः देवाः । 'अमरा निर्जरा देवाः' इत्यमरः । सिद्धाः विद्याधरादयः । 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः । तेषां विमानानि देवयानानि तेषां मार्गं आकाशम् । प्रच्छादयन्तीत्यर्थः । 'व्योमयानं विमानोऽस्त्री' इत्यमरः । 'देवयानम्' इति क्वचित्पाठः ॥

वार्दाः खगाः क्षितिधरागमनप्रकाशा
नेमीभरासभतुरंगमतुल्यघोषाः ।
वाय्वीरिताः खमवतत्य वनं क्षरन्तो
वार्भिः क्षितिं घृतधराः परिनिर्वपन्ति ॥ १२ ॥

वार्दा इति । घृतधराः घृतं पानीयं तत् धरन्तीति मेघाः वार्भिः तोयैः । 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः । क्षितिं परिनिर्वपन्ति । निर्वृतिं नयन्तीत्यर्थः । किंविधा घृतधराः । वार्दाः वाः ददतीति वार्दाः । नीरदा इत्यर्थः । पुनः किंविधाः । खगाः खे सुरवर्त्मनि गच्छन्तीति खगाः । व्योमगा इत्यर्थः । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । किंविधाः । क्षितिधरागमनप्रकाशाः क्षितिधराः पर्वताः तेषु आसमन्ताद्भागेन गमनं चलनं तत्प्रकाशाः तत्समानाः । पर्वतागमनकालसादृश्याः कृताः इत्यर्थः । पुनः किंविधाः । नेमीभरासभतुरंगमतुल्यघोषाः नेमी रथचक्रधारा, इभः हस्ती, रासभः गर्दभः । 'चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः' इत्यमरः । तुरंगमाः अश्वाः तैः तुल्यः घोषः शब्दः येषां ते तथोक्ताः । पुनः किंविधाः । वाय्वीरिताः वायुना ईरिताः क्षिप्ताः । पुनः किंविधाः । खम् आकाशम् अवतत्य व्याप्य वनं सलिलं क्षरन्तः स्रवन्तः । 'वनं सलिलकानने' इत्यमरः ॥

एषोऽङ्घ्रिपाशनरिपुघ्नसुतारिसाह्व-
मारुह्य तिष्ठति सुगात्रि भुजंगमारिः ।
यस्य स्वनैः प्रमुदितस्य ममाद्य बाले
तालध्वजावरजसूनुशराः पतन्ति ॥ १३ ॥

एष इति । हे सुगात्रि, भुजंगमारिः भुजंगमाः सर्पाः तेषाम् अरिः मयूरः । एष इति प्रत्यक्षेण निर्दिशति । अङ्घ्रिपाशनरिपुघ्नसुतारिसाह्वम् अङ्घ्रिपाः वृक्षाः तान् अश्नातीति अङ्घ्रिपाशनः अग्निः तस्य रिपुः पानीयं तत् हन्तीति अङ्घ्रिपाशनरिपुघ्नः आदित्यः तस्य सुतः कर्णः तस्य अरिः अर्जुनः सा आह्वा नाम यस्य तम् अर्जुनवृक्षम् आरुह्य तिष्ठति । हे बाले, यस्य स्वनैः तालध्वजावरजसूनुशराः तालध्वजः बलभद्रः तस्य अवरजः कनिष्ठसहोदरः कृष्णः तस्य सूनुः मदनः तस्य शराः बाणाः मम अद्य पतन्ति । मां व्यथां कुर्वन्तीत्यर्थः । किंभूतस्य मम । प्रमुदितस्य । हृष्टस्येत्यर्थः ॥

उस्राविषं स्थलगतोऽत्ति विसृष्टवार्भ्यो
वार्जो द्विजः स्वपितृभीरुविषप्रहीणः ।

वाताशनः खशयनः स्मरति स्थलस्य
चक्षुःश्रवा वनभयात्सुरशत्रुनामा ॥ १४ ॥

उस्राविषमिति । वार्जः द्विजः कच्छपः उस्राविषं उस्राः गावः तासां विषं गोमयम् अत्ति भक्षयति । 'अद भक्षणे' । किंविधः । विसृष्टवार्भ्यः विसृष्टानि त्यक्तानि वारीणि तेभ्यः पानीयेभ्यः स्थलगतः स्थलमुत्तीर्णः । पुनः किंविधः । स्वपितृभीरुविषप्रहीणः स्वस्य आत्मनः पिता तस्य भीरुः स्त्री माता । 'नारी भीरुर्भामिनी कामिनी च' इति हलायुधः । तस्याः विषं पानीयम् । दुग्धमित्यर्थः । तेन प्रहीणः । रहित इत्यर्थः । उत्पत्त्यनन्तरं जननीदर्शनेनैव जीवनं । न तु स्तनपानेनेत्यर्थः । तथैव वाताशनः वातं पवनं अश्नातीति वाताशनः सर्पः स्थलस्य स्मरति । स्मृतौ च कार्ये षष्ठी स्यात् । स्थलं ध्यायतीत्यर्थः । कस्मात् । वनभयात् । वनं पानीयं तस्य भयात् । किंविधः सर्पः । खशयनः खे बिले शेतेऽसौ खशयनः । बिलेशय इत्यर्थः । पुनः किंविधः । चक्षुःश्रवाः चक्षुषा श्रवो वेगो यस्य असौ । नेत्रवेगवानित्यर्थः । पुनः किंविधः । सुरशत्रुनामा सुरशत्रुः वृत्रासुरः तस्य नाम यस्य असौ । अहिरित्यर्थः ॥

पक्ष्यश्वमेधतुरगप्रतिमोऽष्टवर्णो
वार्दं न बह्विति समाह्वयते ह्यहिघ्नः ।
भेकस्तथैव खशयाशयवेद्यवाणिः
शब्दं करोत्यतिभृशं विषराशिमग्नः ॥ १५ ॥

पक्षीति । अहिघ्नः मयूरः वार्दं मेघं बहु इति वर्षतीति हेतोः न समाह्वयते न आकारयति । हि पूरणे । किंविधः । अश्वमेधतुरगप्रतिमः । अश्वमेधः यज्ञविशेषः तत्र तुरगः विचित्रः तेन तुल्या प्रतिमा यस्य सः । पुनः किंविधः । पक्षी पक्षाः सन्ति यस्य सः । पुनः किंविधः । अष्टवर्णः अष्टौ वर्णाः नीलपीतादयो यस्य सः । तथैव भेकः मण्डूकः । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः । अतिभृशम् अत्यर्थं शब्दं करोति । किंविधः भेकः । खशयाशयवेद्यवाणिः खं बिलं तत्र शेते असौ खशयः सर्पः तस्य आशयः बिलं तस्मात् वेद्या वाणिः यस्य सः । पुनः किंविधः भेकः । विषराशिमग्नः विषं पानीयं तस्य राशिः निचयः तस्मिन् मग्नः । बुडित इत्यर्थः ॥

ना विष्किरावनमुपेत्य कुमातृसाह्व-
माक्रीडते मधुकलोऽङ्गनया समेतः ।
अन्यः स्वयं मणिवराभमुपेत्य गोजं
ना रामया सह पयः पतिजां वृणीते ॥ १६ ॥

ना विष्किरेति । ना पुरुषः आक्रीडते । किं कृत्वा । कुमातृसाह्वं कुत्सिता माता अम्बा सा आह्वा नाम यस्य तत् । कदम्बमित्यर्थः । विष्किराः पक्षिणः तेषां वनं काननम् उपेत्य प्राप्य । किंविधः ना । मधुकलः मधुना मद्येन कलः मधुकलः मधूदरः । विराजमान इत्यर्थः । पुनः किंविधः ना । अङ्गनया समेतः युक्तः । अन्यः ना पुरुषः स्वयं पयःपतिजां लक्ष्मीं वृणीते । दत्ते इत्यर्थः । किं कृत्वा । रामया सह स्त्रिया सह गोजं गवि भूमौ जातं गोजं तृणम् उपेत्य प्राप्य । किंविधं गोजम् । मणिवराभं मणिषु वराः श्रेष्ठाः इन्द्रनीलाः तैः तुल्या आभा यस्य तत् ॥

सूत्रं महत्क्षतजवर्णनिभं नरोऽसौ
बिभ्रत्यमूनि च भिनत्ति सरोरुहाणि ।
तज्जेन चापि रजसा वनितां वयस्थो-
ऽप्यभ्युद्धरत्यवकिरत्यभिषिच्यमानः ॥ १७ ॥

सूत्रमिति । असौ नरः पुमान् सूत्रं वस्त्रम् । 'सूत्रं तन्तुव्यवस्थयोः' इति विश्वः । बिभ्रति । किंभूतं सूत्रम् । महत्क्षतजवर्णनिभं महत्क्षतात् जातं महत्क्षतजं रुधिरं तस्य वर्णः रक्तता तेन निभं सदृशम् । आरक्तमित्यर्थः । अन्यच्च स एव अमूनि सरोरुहाणि पद्मानि भिनत्ति विपाटयति । अन्यच्च तज्जेन चापि रजसा तेषु पद्मेषु जातं तज्जं तेन पद्मरेणुना वनितां अभ्युद्धरति अवकिरति विक्षिपति । किंविधः । वयस्थः वयसि तारुण्ये तिष्ठतीति । युवेत्यर्थः । पुनः किंविधः । वनितया क्रीडारसेन अभिषिच्यमानः ॥

पङ्के निमग्नमिभवृन्दमदः सवारि
गर्जत्तिमिक्षयदवृन्दमिवावभाति ।
वार्यात्मनामशतचित्रतनुः सुपर्णो
योषिद्धृतः समदनः प्रतिरोरवीति ॥ १८ ॥

पङ्क इति । अदः इभवृन्दं सवारि गर्जत्तिमिक्षयदवृन्दमिव अवभाति तिमीनां मत्स्यानां क्षयः उदकं तत् ददतीति मेघाः तेषां वृन्दमिव अवभाति । किंविधं तिमिक्षयदवृन्दम् । सवारि सोदकम् । पुनः किंविधम् । गर्जत् । किंविधम् इभवृन्दम् । पङ्के निमग्नम् । अन्यच्च शोभनानि पर्णानि पत्राणि यस्य सः सुपर्णः मयूरः प्रतिरोरवीति शब्दं करोति । किंविधः सुपर्णः । वार्यात्मनामशतचित्रतनुः वारि उदकं आत्मा यस्य सः एवंभूतः चन्द्रः तस्य नाम येषां ते चन्द्रकाः तेषां शतं तेन चित्रा विचित्रा तनुः शरीरं यस्य सः । पुनः किंविधः । योषिद्धृतः स्त्रिया वशीकृतः । अत एव समदनः । सकाम इत्यर्थः ॥

विस्फोटिताम्बररवेण रिरंसुरेव
संत्रासितो हरिरनोकहनिष्कुटीषु ।
संलीयते तडितमाभिमुखीं च दृष्ट्वा
खं खान्महत्तरमसौ समनुप्रविष्टः ॥ १९ ॥

विस्फोटितेति । हरिः सिंहः अनोकहनिष्कुटीषु अनोकहाः वृक्षविशेषाः । 'अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः' इत्यमरः । तैः युक्तासु निष्कुटीषु निकुञ्जेषु रिरंसुरेव रन्तुमिच्छुरेव संलीयते लयं प्राप्नोति । किंभूतः हरिः । विस्फोटिताम्बररवेण गर्जन्मेघशब्देन संत्रासितः भीतः । असौ प्रत्यक्षः पश्चात् ततः तडितं सौदामिनीं अभिमुखीं च दृष्ट्वा खात् बिलात् महत्तरं खं बिलं समनुप्रविष्टः । त्वं पश्येति समुदायार्थः ॥

एतावदुत्तमवचः सुमनाः स उक्त्वा
रन्त्वा दिनं सह तया प्रियया ह्यदीनः ।
युक्तं चतुर्भिरनडुद्भिरदीनवद्भि-
रारुह्य यानमथ संप्रययौ स्वगेहम् ॥ २० ॥

एतावदिति । अथेत्यनन्तरं सः पुमान् स्वगेहं संप्रययौ । किं कृत्वा । पुनः यानमरुह्य । किंभूतं यानम् । चतुर्भिरनडुद्भिः वृषैः युक्तम् । किंभूतैः अनडुद्भिः । अदीनवद्भिः । उन्नतैरित्यर्थः । किं कृत्वा । एतावत् उत्तमवचः उक्त्वा । पुनः किं कृत्वा । तया प्रियया सह दिनं दिनपर्यन्तं रन्त्वा क्रीडित्वा । किंविधः सः । सुमनाः सुष्ठु सुन्दरं मनः अन्तःकरणं यस्य सः । शुद्धमानस इत्यर्थः । पुनः किंविधः । अदीनः । सुन्दर इत्यर्थः ॥

इति श्रीकालिदासकृतं राक्षसकाव्यं समाप्तम् ।



